तनूनपात्पथ ऋतस्य यानान् । यज्ञस्य यानान् । मधुना समञ्जन्त्स्वदय कल्याणजिह्व । मननानि च नो धीभिर्यज्ञं च समर्धय । देवान्नो यज्ञं गमय ॥

नराशंसः ( ४ ) यज्ञ इति कात्थक्यः । नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिः । नरैः प्रशस्यो भवति । तस्यैषा भवति॥ ६ ॥ ३ ॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥
ऋ० ७ । २ । २ ॥

नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैः । ये सुकर्माणः शुचयो धियं धारयितारः । स्वदयन्तु देवा उभयानि हवींषि । सोमं चेतराणि चेति वा । तान्त्राणि चावापिकानि चेति वा ॥

इळः ( ५ ) ईट्टेः स्तुतिकर्मणः । इन्धतेर्वा । तस्यैषा भवति ॥ ७ ॥ ४ ॥

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥
ऋ० १० । ११० । ३ ॥

आह्वयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सहजोषणः । त्वं देवानामसि यह्व होता । यह्वः ( निघं० ३ । ३ । १३ ) । इति महतो नामधेयम् । यातश्च हूतश्च भवति । स एनान्यक्षीषितो यजीयान् । इषितः प्रेषितः इति वा । अधीष्टः इति वा । यजीयान्यष्टृतरः ॥

बर्हिः ( ६ ) परिबर्हणात् । तस्यैषा भवति ॥ ८ ॥ ५ ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम्।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥

ऋ० १० । ११० । ४ ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यतेऽग्रेह्नां बर्हिः पूर्वाह्णे । तद्विप्रथते । वितरं विस्तीर्णतरमितिवा *। वरीयो वरतरम् । उरुतरं वा । देवेभ्यश्चादितये च स्योनम् । स्योनम् ( निघं० ३ । ६ । १५ ) इति सुखनाम । स्यतेः । अवस्यन्ति एतत् । सेवितव्यम् भवतीति वा ॥

द्वारः ( ७ ) जवतेर्वा । द्रवतेर्वा । वारयतेर्वा । तासामेषा भवति ॥ ९ ॥ ६ ॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥

ऋ० १० । ११० । ५ ॥

व्यञ्चनवत्य उरुत्वेन विश्रयन्ताम् । पतिभ्य इव जाया ऊरू मैथुने धर्मे । शुशोभिषमाणाः । वरतममङ्गमूरू । देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वा विश्वमाभिरेति यज्ञे । गृहद्वार इति कात्थक्योऽग्निरिति शाकपूणिः ॥

उषासानक्ता ( ८ ) उषाः च नक्ता च । उषाः व्याख्याता ( निरु० २ । १८ ) । नक्ता ( निघं० १ । ७ । १० ) इति रात्रिनाम । अनक्ति भूतान्यवश्यायेन । अपि वा । नक्ताव्यक्तवर्णा । तयोरेषा भवति ॥ १० ॥ ७ ॥

* विकीर्णतरं वितीर्णतरमिति वा । अधिकं केषुचित्पुस्तकेषु ॥ सं० ॥

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधिश्रियं शुक्रपिशं दधाने ॥

ऋ० १० । ११० । ६ ॥

सेष्मीयमाणे इति वा । सुष्वापयन्त्याविति वा । आसीदतामिति वा । न्यासीदतामिति वा । यज्ञिये । उपक्रान्ते । दिव्ये योषणे । बृहत्यौ महत्यौ । सुरुक्मे सुरोचने । अधिदधाने शुक्रपेशसं श्रियम् । शुक्रं शोचतेर्ज्वलतिकर्मणः । पेशः ( निघं० ३ । ७ । १० ) इति रूपनाम । पिंशतेः । विपिशितं भवति । दैव्या होतारा ( ६ ) दैव्यौ होतारौ । अयं चाग्निरसौ च मध्यमः । तयोरेषा भवति ॥ ११ ॥ ८ ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥

ऋ० १ । ११० । ७ ॥

दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ यज्ञेषु कर्त्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ ॥

तिस्रो देवीः ( १० ) तिस्रो देव्यः । तासामेषा भवति ॥ १२ ॥ ६ ॥

आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥

ऋ० १० । ११० । ८ ॥

ऐतु नो यज्ञं भारती क्षिप्रम् । भरतः आदित्यः । तस्य भाः । इळा च । मनुष्यवदिह चेतयमाना । तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ।

त्वष्टा ( ११ ) तूर्णमश्नुत इति नैरुक्ताः। त्विषेर्वा स्याद् दीप्तिकर्मणः। त्वक्षतेर्वा स्यात्करोतिकर्मणः। तस्यैषा भवति ॥ १३ ॥ १० ॥

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा।
तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥

ऋ० १० । ११० । ९ ॥

य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोत्। भूतानि च सर्वाणि। तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यज विद्वान्। माध्यमिकस्त्वष्टेत्याहुः। मध्यमे च स्थाने समाम्नातः ( निघं० ५ । ४ । २१ )। अग्निरिति शाकपूणिः। तस्यैषापरा भवति ॥ १४ ॥ ११ ॥

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे।
उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते ॥

ऋ० १ । ९५ । ५ ॥

आविरावेदनात्। तस्यः वर्धते चारुरासु। चारुचरतेः। जिह्मं जिहीतेः। ऊर्ध्व उच्छ्रितो भवति। स्वयशा आत्मयशाः। उपस्थ उपस्थाने। उभे त्वष्टुर्बिभ्यतुर्जायमानात्। द्यावापृथिव्याविति वा। अहोरात्रे इति वा। अरणी इति वा। प्रतीची सिंहं प्रति जोषयेते। प्रत्यक्ते। सिंहं सहनम्। प्रत्यासेवेते ॥ १५ ॥ १२ ॥

इति द्वितीयाऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

वनस्पतिः (१२) व्याख्यातः (निरु० ८ । ३) । तस्यैषा भवति ॥ १६ ॥ १ ॥

उपावसृज त्मन्यासमञ्जन्देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥
ऋ० १० । ११० । १० ॥

उपावसृजात्मनात्मानं समञ्जन्देवानामन्नमृतावृतौ हवींषि कालेकाले । वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च । तत्को वनस्पतिः ? यूप इति कात्थक्योऽग्निरिति शाकपूणिः । तस्यैषापरा भवति ॥ १७ ॥ २ ॥

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥
ऋ० ३ । ८ । १ ॥

अञ्जन्ति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च । यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि । यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने । अग्निरिति शाकपूणिः । तस्यैषापरा भवति ॥ १८ ॥ ३ ॥

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥
मै० सं० ४ । १३ । ७ ॥

देवेभ्यो वनस्पते हवींषि । हिरण्यपर्ण ऋतपर्ण । अपि वा । उपमार्थे स्यात् । हिरण्यवर्णपर्णेति । प्रदिवस्ते अर्थम् । पुराणस्ते सोऽर्थो यं ते प्रब्रूमः । यज्ञस्य वह पथिभिः । रजिष्ठैर्ऋजुतमैः । रजस्वलतमैः । तपिष्ठतमैः * । इति वा । तस्यैषापरा भवति ॥ १९ ॥ ४ ॥

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ॥

मै० सं० ४ । १३ । ७ † ॥

वनस्पते रशनया नियूय । सुरूपतमया । वयुनानि विद्वान् । प्रज्ञानानि प्रजानन् । वह देवान् यज्ञे दातुर्हवींषि । प्रब्रूहि च दातारममृतेषु देवेषु ॥

स्वाहाकृतयः ( १३ ) स्वाहा ( निघं० १ । ११ । २४ ) इत्येतत्सु आहेति वा । स्वा वागाहेति वा । स्वं प्राहेति वा । स्वाहुतं हविर्जुहोतीति वा । तासामेषा भवति ॥ २० ॥ ५ ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥

ऋ० १० । ११० । ११ ॥

सद्यः जायमानः निरमिमीत यज्ञम् । अग्निः देवानां अभवत् पुरोगामी । अस्य होतुः प्रदिशि ऋतस्य वाचि आस्ये स्वाहाकृतं हविः अदन्तु देवाः, इति यजन्ति ‡ ॥ इतीमा आप्रीदेवता अनुक्रान्ताः ।

अथ किंदेवताः प्रयाजानुयाजाः । आग्नेया इत्येके ॥ २१ ॥ ६ ॥

---

* प्रपिष्टतमैरिति वा । इति पाठा० ॥ † सायण ऋ० भा० ँषाध्याये च ॥

‡ केषुचित् पुस्तकेषु 'इति यजन्ति' पाठो न विद्यत इति ॥ सं० ॥

प्रयाजान्मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥
ऋ० १० । ५१ । ८ ॥

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।
तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥
ऋ० १० । ५१ । ९ ॥

आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणम् । छन्दोदेवता इत्यपरम् । छन्दाँसि वै प्रयाजाश्छन्दाँस्यनुयाजा इति च ब्राह्मणम् । ऋतुदेवता इत्यपरम् । ऋतवो वै प्रयाजा ऋतवोऽनुयाजा इति च ब्राह्मणम् । पशुदेवता इत्यपरम् । पशवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणम् । प्राणदेवता इत्यपरम् । प्राणा वै प्रयाजाः प्राणा वा अनुयाजा इति च ब्राह्मणम् । आत्मदेवता इत्यपरम् । आत्मा वै प्रयाजा आत्मा वा अनुयाजा इति च ब्राह्मणम् । आग्नेया इति तु स्थितिः । भक्तिमात्रमितरत् । किमर्थं पुनरिदमुच्यते । यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन् (ऐ० ब्रा० ११ । ८) इति ह विज्ञायते ॥

तान्येतान्येकादशाप्रीसूक्तानि । तेषां वासिष्ठं आत्रेयं वाध्र्यश्वं गात्र्समदम्-इति नाराशंसवन्ति । मैधातिथं दैर्घतमसं प्रैषिकम्-इत्युभयवन्ति । अतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ॥ २२ ॥ ७ ॥

---

इति निरुक्तोत्तर षट्के द्वितीयाध्यायस्य तृतीयः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्त अष्टमोऽध्यायश्च समाप्तः ॥

ओ३म्

# अथ तृतीयाऽध्यायारम्भः ॥

[ निरुक्ते नवमोऽध्यायः ]

---

## तत्र प्रथमः पादः ॥

अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः । तेषामश्वः ( निघ० ५ । ३ । १ ) प्रथमागामी भवति । अश्वो व्याख्यातः ( निरु० २ । २७ ) । तस्यैषा भवति ॥ १ ॥

अश्वो॒ वोळ्हा॑ सु॒खं रथं॑ हस॒नामु॑पम॒न्त्रिणः॑ ।
शेपो॒ रोम॑ण्वन्तौ भे॒दौ वारि॒न्म॒ण्डूक॑ इ॒च्छ॒तीन्द्रा॒येन्दो॒ परि॑ स्रव ॥

ऋ० ९ । ११२ । ४ ॥

अश्वो वोढा सुखं वोढा रथं वोढा । सुखमिति कल्याणनाम । कल्याणं पुण्यम् । सुहितं भवति । सुहितं गम्यतीति वा । हसैता वा । पाता वा पालयिता वा । शेपमृच्छतीति । वारि वारयति ॥

मा नो व्याख्यातः । तस्यैषा भवति ॥ २ ॥

मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् ।
य॒द्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥

ऋ० १ । १६२ । १ ॥

यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि । मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुः । अयनः । इन्द्रश्चोरुक्षयणः । ऋभूणां राजेति वा । मरुतश्च परिख्यन् ।

शकुनिः ( २ ) शक्नोत्युन्नेतुमात्मानम् । शक्नोति नदितुमिति वा । शक्नोति तकितुमिति वा । सर्वतः शङ्करोऽस्त्विति वा । शक्नोतेर्वा । तस्यैषा भवति ॥ ३ ॥

कनि॑क्रदज्ज॒नुषं॑ प्रब्रुवा॒ण इय॑र्ति॒ वाच॑मरि॒तेव॒ नाव॑म् ।
सुम॒ङ्गल॑श्च शकुने॒ भवा॑सि॒ मा त्वा॒ का चि॑दभि॒भा विश्व्या॑ विदत् ॥

ऋ० २ । ४२ । १ ॥

न्यक्रन्दीज्जन्म प्रब्रुवाणः यथास्य शब्दस्तथा नाम । ईरयति वाचमीरयितेव नावम् । सुमङ्गलश्च शकुने! भव । कल्याणमङ्गलः । मङ्गलं गिरतेर्गृणात्यर्थे । गिरत्यनर्थानिति वा । अङ्गलमङ्गवत् । मज्जयति पापकमिति नैरुक्ताः । मां गच्छत्विति वा । मा च त्वा काचित् । अभिभूतिः सर्वतो विदत् । गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे । तदभिवादिन्येषर्ग्भवति ॥ ४ ॥

भ॒द्रं व॑द दक्षिण॒तो भ॒द्रमु॑त्तर॒तो व॑द ।
भ॒द्रं पु॒रस्ता॑न्नो वद भ॒द्रं प॒श्चात्कपि॒ञ्जल॑ः * ॥

इति सा निगदव्याख्याता । गृत्समदो गृत्समदनः । गृत्सः ( निघ० ३ । १५ । ३ ) इति मेधाविनाम । गृणातेः स्तुतिकर्मणः ॥

मण्डूकाः ( ३ ) मज्जूकाः मज्जनात् । मदतेर्वा मोदतिकर्मणः । मन्दतेर्वा तृप्तिकर्मणः । मण्डयतेरिति वैयाकरणाः । मण्ड एषामोक इति वा । मण्डो मदेर्वा । मुदेर्वा । तेषामेषा भवति ॥ ५ ॥

* केषुचित् ऋक्शाखा पुस्तकेषु दृश्यतेऽयं मन्त्रः ॥ सं० ॥

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥
* ऋ० ७ । १०३ । १ ॥

संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः † । अपि वोपमार्थे स्यात् । ब्राह्मणा इव व्रतचारिण इति । वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः । वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त । स मण्डूकाननुमोदमानान्दृष्ट्वा तुष्टाव । तदभिवादिन्येषर्ग्भवति ॥ ६ ॥

उप प्र वद ‡ मण्डूकि वर्षमा वद तादुरि ।
मध्ये ह्रदस्य प्लवस्व + विगृह्य चतुरः पदः ॥
अथ० ४ । १५ । १४ ॥

इति सा निगदव्याख्याता ॥

अक्षाः ( ४ ) अश्नुवत एनानिति वा । अभ्यश्नुवत एभिरिति वा । तेषामेषा भवति ॥ ७ ॥

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥
ऋ० १० । ३४ । १ ॥

प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति । प्रवातेजाः प्रवणेजाः । इरिणे वर्त्तमानाः । इरिणं निर्ऋणम् । ऋणातेः ।

* अथर्ववेदेऽपि का० ४ । १५ । १३ ॥ † ब्रुवाणाः । इति पाठा० ॥
‡ 'उप प्रवद' । + 'प्लवस्व' । इति पाठौ अथर्ववेदे ॥ सं० ॥

अपार्णं भवति । अपरता अस्मादोषधय इति वा । सोमस्येव मौजवतस्य भक्षः । मौजवतो मूजवति जातः । मूजवान् पर्वतः । मुञ्जवान् । मुञ्जो विमुच्यत इषीकया । इषीका इषतेर्गतिकर्मणः । इयमपीतरेषीका एतस्मादेव । विभीदको विभेदनात् । जागृवि- र्जागरणात् । मह्यमचच्छदत् । प्रशंसत्येनान्प्रथमया । निन्दत्युत्त- राभिः । ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ॥

ग्रावाणः ( ५ ) हन्तेर्वा । गृणातेर्वा । गृह्णातेर्वा । तेषामेषा भवति ॥ ८ ॥

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥
ऋ० १० । ९४ । १ ॥

प्रवदन्त्वेते । प्रवदाम वयम् । ग्रावभ्यो वाचं वदत वदद्भ्यः । यदद्रयः पर्वताः । अदरणीयाः * । सह सोमम् । आशवः क्षिप्रकारिणः । श्लोकः शृणोतेः । घोषो घुष्यतेः । सोमिनो यूयं स्थेति वा । सोमिनो गृहेष्विति वा ॥

येन नराः प्रशस्यन्ते स नाराशंसः ( ६ ) मन्त्रः । तस्यैषा भवति ॥ ६ ॥

अमन्दान्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥
ऋ० १ । १२६ । १ ॥

* आदरणीयाः । इति पाठान्तरम् ॥ सं० ॥

अमन्दान्स्तोमान् । अबालिशाननल्पान्वा । बालो बलवर्ती * भर्तव्यो भवति । अम्बा स्मा अलं भवतीति वा । अम्बास्मै बलं भवतीति वा । बलो वा प्रतिषेधव्यवहितः । प्रभरे । मनीषया मनस ईषया । स्तुत्या प्रज्ञया वा । सिन्धावधि निवसतो भावयव्यस्य राज्ञः । यो मे सहस्रं निरमिमीत सवान् । अतूर्त्तो राजा । अतूर्ण इति वा । अत्वरमाण इति वा । प्रशंसामिच्छमानः ॥ १० ॥

इति तृतीयाऽध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

यज्ञसंयोगाद्राजा स्तुतिं लभेत । राजसंयोगाद्युद्धोपकरणानि । तेषां रथः प्रथमागामी भवति ।

रथः ( ७ ) रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद्विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा । रपतेर्वा । रसतेर्वा । तस्यैषा भवति ॥ ११ ॥ १ ॥

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीळयस्वाऽऽस्थाता ते जयतु जेत्वानि ॥

ऋ० ६ । ४७ । २६ ॥

वनस्पते ! दृढाङ्गो हि भव । अस्मत्सखा प्रतरणः । सुवीरः कल्याणवीरः । गोभिः सन्नद्धो असि । वीडयस्वेति संस्तम्भस्व । आस्थाता ते जयतु जेतव्यानि ॥

दुन्दुभिः ( ८ ) इति शब्दानुकरणम् । द्रुमो भिन्न इति वा । दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः । तस्यैषा भवति ॥ १२ ॥ २ ॥

---

* बलभर्त्ता । इति पाठा० ॥ सं० ॥

उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनु॒तां विष्ठि॑तं॒ जग॑त् ।
स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑ सेध॒ शत्रू॑न् ॥

ऋ० ६ । ४७ । २९ ॥

उपश्वासय पृथिवीं च दिवं च । बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत् । स दुन्दुभे ! सहजोषण इन्द्रेण च देवैश्च । दूराद् दूरतरमपसेध शत्रून् ॥

इषुधिः ( ९ ) इषूणां निधानम् । तस्यैषा भवति ॥ १३ ॥ ३ ॥

ब॒ह्वीनां॑ पि॒ता ब॒हुर॑स्य पु॒त्रश्चि॒श्चा कृ॑णोति॒ सम॑नाव॒गत्य॑ ।
इ॒षु॒धिः स॒ङ्काः पृत॑नाश्च॒ सर्वाः॑ पृ॒ष्ठे निन॑द्धो जयति॒ प्रसू॑तः ॥

ऋ० ६ । ७५ । ५ ॥

बह्वीनां पिता । बहुरस्य पुत्रः । इतीषूनभिप्रेत्य । प्रस्मयत इवापाव्रियमाणः । शब्दानुकरणं वा । सङ्काः सचतेः । संपूर्वाद्वा किरतेः । पृष्ठे निनद्धो जयति प्रसूतः । इति व्याख्यातम् ॥

हस्तघ्नः ( १० ) हस्ते हन्यते । तस्यैषा भवति ॥ १४ ॥ ४ ॥

अहि॑रिव भो॒गैः पर्ये॑ति बा॒हुं ज्याया॑ हे॒तिं प॑रि॒बाध॑मानः ।
ह॒स्त॒घ्नो विश्वा॑ व॒युना॑नि वि॒द्वान्पुमा॒न्पुमां॑सं॒ परि॑ पातु वि॒श्वतः॑ ॥

ऋ० ६ । ७५ । १४ ॥

अहिरिव भोगैः परिवेष्टयति बाहुम् । ज्यायावधात्परित्रायमाणः । हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् । पुमान्पुरुमना भवति । पुंसतेर्वा ॥

अभीशवः ( ११ ) व्याख्याताः । तेषामेषा भवति ॥ १५ ॥ ५ ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥

ऋ० ६ । ७५ । ६ ॥

रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतः । यत्र यत्र कामयते । सुषारथिः कल्याणसारथिः । अभीशूनां महिमानं पूजयामि * । मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयः ॥

धनुः (१२) धन्वतेर्गतिकर्मणः । वधकर्मणः वा । धन्वन्त्यस्मात् इषवः । तस्यैषा भवति ॥ १६ ॥ ६ ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥

ऋ० ६ । ७५ । २ ॥

इति सा निगदव्याख्याता । समदः समदो वात्तेः । सम्मदो वा मदतेः † ॥

ज्या (१३) जयतेर्वा । जिनातेर्वा । प्रजावयतीषूनिति वा । तस्या एषा भवति ॥ १७ ॥ ७ ॥

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वन् ज्या इयं समने पारयन्ती ॥

ऋ० ६ । ७५ । ३ ॥

---

* पूजयत । इति पाठान्तरम् ॥

† समदः सम् अदः वा अत्तेः । संमदः वा मदतेः । इति स्पष्टम् ॥ सं० ॥

वक्ष्यन्तीवागच्छति * कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते । शब्दं करोति । वितताधि धनुषि ज्येयं समने सङ्ग्रामे पारयन्ती । पारं नयन्ती ।

इषुः ( १४ ) † ईषतेर्गतिकर्मणः । वधकर्मणः वा । तस्यैषा भवति ॥ १८ ॥ ८ ॥

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥
ऋ० ६ । ७५ । ११ ॥

'सुपर्णं वस्ते' इति वाजानभिप्रेत्य । मृगमयोऽस्या दन्तः । मृगयतेर्वा । गोभिः सन्नद्धा पतति प्रसूतेति व्याख्यातम् ( निरु० २ । ५ ) । यत्र नराः सन्द्रवन्ति च विद्रवन्ति च । तत्रास्मभ्यमिषवः शर्म यच्छन्तु । शरणं सङ्ग्रामेषु ॥

अश्वाजनीं ( १५ ) कशेत्याहुः । कशा प्रकाशयति भयमश्वाय । कृष्यते ‡ वाणूभावात् । वाक् पुनः प्रकाशयत्यर्थान् । खशया । क्रोशतेर्वा । अश्वकशाया एषा भवति ॥ १९ ॥ ९ ॥

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ ऋ० ६ । ७५ । १३ ॥

आघ्नन्ति सानून्येषाम् । सरणानि सक्थीनि । सक्थि सचतेः । आसक्तोऽस्मिन्कायः । जघनानि चोपघ्नन्ति । जघनं

* आगच्छती । इति पूर्वमुद्रिते पाठः ॥ † ईषेः किच्च ॥ उणा० १ । १३ ॥
अत्र चकारादिच्चेत्यनुवर्त्तते तेन दीर्घस्य ह्रस्वत्वम् ॥
‡ 'कृश्यतेः' । इति केषाञ्चिन्मते । सं० ॥

जङ्घन्यते: । अश्वाजनि ! प्रचेतस: । प्रवृद्धचेतसः । अश्वान् । समत्सु समरणेषु सङ्ग्रामेषु । चोदय ॥

उलूखलम् ( १६ ) उरुकरं वोर्क्करं वोर्ध्वखं वा * । उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् । उरूकरं चैतत् । उलूखलमित्याचक्षते परोक्षेण ( शत० ब्रा० ७ । ५ । १ । २२ ) इति च ब्राह्मणम् । तस्यैषा भवति ॥ २० ॥ १० ॥

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ऋ० १ । २८ । ५ ॥

इति सा निगदव्याख्याता ॥ २१ ॥ ११ ॥

इति तृतीयाऽध्यायस्य द्वितीयः पाद ॥

---

## अथ तृतीयः पादः ॥

वृषभः ( १७ ) प्रजां वर्षतीति वा । अतिवृहति † रेत इति वा । तद्वृषकर्मा । वर्षणाद्वृषभः । तस्यैषा भवति ॥ २२ ॥ १ ॥

न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥
ऋ० १० । १०२ । ५ ॥

---

* उलूखलम् उरुकरं वा । ऊर्करं वा । ऊर्ध्वखं वा । इति स्पष्टम् ॥

† अत्र यास्काचार्येण 'वृह' धातुर्वर्षणार्थेऽङ्गीकृता । धातुपाठे तु नास्ति । केचिदत्र 'अतिबृहति' इति पठन्ति ॥ सं० ॥

न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातम् । अमेहयन्वृषभं मध्य आजेः आजयनस्य । आजवनस्येति वा । तेन तं सूभर्वं राजानम् । भर्वतिः ( निघ० २ । ८ । २ ) अत्तिकर्मा । तद्वा सूभर्वं सहस्रं गवाम् । मुद्गलः प्रधने जिगाय । प्रधने ( निघ० २ । १७ ) इति सङ्ग्रामनाम * । प्रकीर्णान्यस्मिन्धनानि भवन्ति ॥

द्रुघणः ( १८ ) द्रुममयो घणः [घनः] । तत्रेतिहासमाचक्षते:— मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा सङ्ग्रामे व्यवहृत्याजिं जिगाय । तदभिवादिन्येषर्ग्भवति ॥ २३ ॥ २ ॥

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥
ऋ० १० । १०२ । ९ ॥

इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु । पृतनाज्यम् ( निघ० २ । १७ । ९ ) इति सङ्ग्रामनाम । पृतनानामजनाद्वा । जयनाद्वा । मुद्गलो मुद्गवान् । मुद्गिलो वा । मदनं गिलतीति वा । मदङ्गिलो वा । मुदङ्गिलो वा । भार्म्यश्वो भृम्यश्वस्य पुत्रः । भृम्यवश्वः । भृमयोऽस्याश्वाः । अश्वभरणाद्वा ।

पितुः ( १९ ) इति अन्ननाम ( निघ० २ । ७ । ९ ) । पातेर्वा । पिबतेर्वा । प्यायतेर्वा । तस्यैषा भवति ॥ २४ ॥ ३ ॥

पितुं नु स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ ऋ० १ । १८७ । १ ॥

* देखिये वै० यं० मुद्रित निघण्टु छठा संस्करण पृष्ठ ९ टि० ९ ॥ सं० ॥

तं पितुं स्तौमि महतो धारयितारं बलस्य । तविषी ( निघ० २ । ६ । १० ) इति बलनाम । तवतेर्वा * वृद्धिकर्मणः । यस्य त्रित ओजसा बलेन । त्रितस्त्रिस्थान † इन्द्रः । वृत्रं विपर्वाणं व्यर्दयति ॥

नद्यः ( २० ) व्याख्याताः ( निरु० २ । २४ ) । तासामेषा भवति ॥ २५ ॥ ४ ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
आसिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया ॥

ऋ० १० । ७५ । ५ ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि ! स्तोममासेवध्वम् । असिक्न्या च सह मरुद्वृधे । वितस्तया चार्जीकीये । आशृणुहि सुषोमया च । इति समस्तार्थः । अथैकपदनिरुक्तम्— गङ्गा गमनात् । यमुना प्रयुवती गच्छतीति वा । प्रवियुतं गच्छतीति वा । सरस्वती । सरः ( निघ० १ । १२ । ३८ ) इत्युदकनाम । सर्तेस्तद्वती । शुतुद्री शुद्राविणी क्षिप्रद्राविणी । आशु तुन्नेव द्रवतीति वा । इरावतीं परुष्णीत्याहुः । पर्ववती भास्वती कुटिलगामिनी । असिक्नी अशुक्ला असिता । सितमिति वर्णनाम । तत्प्रतिषेधोऽसितम् । मरुद्वृधाः सर्वाः नद्यः । मरुत एना वर्धयन्ति । वितस्ता विदग्धा ‡ । विवृद्धा महाकूला । आर्जीकीयां विपाडित्याहुः । ऋजूकप्रभवा + वा । ऋजुगामिनी वा । विपाड् विपाटनाद्वा । विपाशनाद्वा । विप्रापणाद्वा । पाशा अस्यां व्यपाश्यन्त × वशिष्ठस्य मुमूर्षतः ।

* तवते॒र्वृद्धिकर्मणः इति पाठा० ॥ † त्रिषु स्थानेषु तनोतीति त्रितः ॥
‡ वितस्ता अविदग्धा । इति पाठा० ॥
+ ऋजीकप्रभवा । इति पाठा० ॥ × व्यपाशन्त । इति पाठा० ॥ सं० ॥

तस्माद्द्विपादुच्यते । पूर्वमासीदुरुञ्जिरा * । सुषोमा सिन्धुः । यदेनामभिप्रस्रुवन्ति नद्यः । सिन्धुः स्यन्दनात् ॥

आपः ( २१ ) आप्नोतेः । तासामेषा भवति ॥ २६ ॥ ५ ॥

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥
ऋ० १० । ९ । १ ॥

आपो हि स्थ सुखभुवः । ता नोऽन्नाय धत्त । महते च नो रणाय । रमणीयाय च दर्शनाय ॥

ओषधयः ( २२ ) ओषद्धयन्तीति वौषत्येना धयन्तीति वा † । दोषं धयन्तीति वा । तासामेषा भवति ॥ २७ ॥ ६ ॥

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥
ऋ० १० । ९७ । १ ॥

या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा । मन्ये नु तद् बभ्रूणामहम् । बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च इति । धामानि त्रयाणि भवन्ति । स्थानानि नामानि जन्मानीति । जन्मानि ‡ अत्राभिप्रेतानि । सप्तशतं पुरुषस्य मर्मणाम् । तेष्वेना दधतीति वा ॥

रात्रिः ( २३ ) व्याख्याता ( निरु० २ । १८ ) तस्या एषा भवति ॥ २८ ॥ ७ ॥

---

* यास्कसमयात्पूर्वं 'इडा' उरुञ्जिरा' इति नाम्ना प्रसिद्धाऽऽसीदित्यर्थः ॥
† ओषत् धयन्ति इति वा । ओषति एनाः धयन्ति इति वा । इति स्पष्टम् ॥
‡ स्थानानि । इति पाठा० ॥ सं० ॥

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्त्तते तमः ॥
अथ० १९ । ४७ । १ ॥

आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य । दिवः सदांसि । बृहती महती । वितिष्ठसे । आवर्त्तते त्वेषं तमोरजः ॥

अरण्यानी ( २४ ) अरण्यस्य पत्नी । अरण्यमपार्णं ग्रामात् । अरमणं भवतीति वा । तस्या एषा भवति ॥ २९ ॥ ८ ॥

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ॥
ऋ० १० । १४६ । १ ॥

अरण्यानि ! इति एनामामन्त्रयते । यासावरण्यानि वनानि पराची इव नश्यसि । कथं ग्रामं न पृच्छसि । न त्वा भीःविन्दति इव इति । * इवः परिभयार्थे वा ॥

श्रद्धा ( २५ ) श्रद्धानात् । तस्या एषा भवति ॥ ३० ॥ ९ ॥

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥
ऋ० १० । १५१ । १ ॥

श्रद्धयाग्निः साधु समिध्यते । श्रद्धया हविः साधु हूयते । श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः ॥

पृथिवी ( २६ ) व्याख्याता ( निरु० १ । १४ † ) । तस्या एषा भवति ॥ ३१ ॥ १० ॥

---

* केचित् 'विन्दति इव । इति इवः परि०' । इति पठन्ति ॥

† ( निरु० १ । १३—१४ ) ॥ सं० ॥

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥

ऋ० १ । २२ । १५ ॥

सुखा नः पृथिवि भवानृक्षरा निवेशनी । ऋक्षरः कण्टकः । ऋच्छतेः । कण्टकः कंतपो वा । कृन्ततेर्वा । कण्टतेर्वा स्याद्गतिकर्मणः । उद्गततमो भवति । यच्छ नः शर्म । [ यच्छन्तु ] शरणम् * । सर्वतः पृथु ॥

अप्वा ( २७ ) व्याख्याता ( निरु० ६ । १२ ) । तस्या एषा भवति ॥ ३२ ॥ ११ ॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥

ऋ० १० । १०३ । १२ ॥

अमीषां चित्तानि प्रज्ञानानि । प्रतिलोभयमाना गृहाणाङ्गानि अप्वे ! परेहि । अभिप्रेहि । निर्दहैषां हृदयानि शोकैः । अन्धेनामित्रास्तमसा संसेव्यन्ताम् ।

अग्नायी ( २८ ) अग्नेः पत्नी । तस्या एषा भवति ॥ ३३ ॥ १२ ॥

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥

ऋ० १ । २२ । १२ ॥

इति सा निगदव्याख्याता ॥ ३४ ॥ १३ ॥

इति तृतीयाऽध्यायस्य तृतीयः पादः ॥

---

* ०शर्म शरणम्० इति सायणः । ०यच्छन्तु शरणम्० । इति स्वामि दयानन्द सम्मतः पाठः । ऋ० भाष्य १ । २२ । १५ ॥ सं० ॥

## अथ चतुर्थः पादः ॥

अथातोऽष्टौ द्वन्द्वानि ॥ ( निघ० ५ । ३ । २९—३६ )

उलूखलमुसले ( २९ ) । उलूखलं व्याख्यातम् ( निरु० ९ । २० ) । मुसलं मुहुः सरम् । तयोरेषा भवति ॥ ३५ ॥ १ ॥

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ।
हरी इवान्धांसि * बप्सता † ॥ ऋ० १ । २८ । ७ ॥

आयष्टव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने ‡ ।

हविर्धाने ( ३० ) हविषां निधाने । तयोरेषा भवति ॥ ३६ ॥ २१ ॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥
ऋ० २ । ४१ । २१ ॥

आसीदन्तु वामुपस्थमुपस्थानम् । अद्रोग्धव्ये इति वा + । यज्ञिया देवाः । यज्ञसम्पादिनः । इहाद्य सोमपानाय ॥

द्यावापृथिव्यौ ( ३१ ) व्याख्याते ( निरु० १ । १३ ) । तयोरेषा भवति ॥ ३७ ॥ ३ ॥

---

* 'अन्ध' इत्यन्ननामसु पठितम् निघ० २ । ७ ॥

† ( बप्सता ) बप्सन्तौ । अत्र भसभर्त्सनदीप्त्योरित्यस्माल्लटः शत्रादेशः । घसिभसोर्हलि च । अ० ६ । ४ । १०० । अनेनोपधा लोपः । इत्याद्यस्य सिद्धिः सरलैव सुधीभ्यः ॥

‡ भस धातोर्भर्त्सन इत्यर्थो नवीनो भक्षण इति प्राचीनोऽर्थः । ऋषि दयानन्द ऋ० भाष्य० १ । २८ । ७ ॥

+ इति वा । इति केचिन्न पठन्ति ॥ सं० ॥

द्यावा॑ नः पृथि॒वी इ॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृश॑म् ।
य॒ज्ञं दे॒वेषु॑ यच्छताम् ॥ ऋ० २ । ४१ । २० ॥

द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ॥

विपाट्छुतुद्र्यौ (३२) व्याख्याते (निरु० ९ । २६)। तयोरेषा भवति ॥ ३८ ॥ ४ ॥

प्र पर्व॑ताना॒मुश॒ती उ॒पस्था॒दश्वे॑ इव॒ विषि॑ते॒ हास॑माने ।
गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट्छुतु॒द्री पय॑सा जवेते ॥
ऋ० ३ । ३३ । १ ॥

पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव । विमुक्ते इति वा । विषण्णे इति वा । हासमाने । हासतिः स्पर्धायाम् । हर्षमाणे वा । गावाविव शुभ्रे शोभने । मातरौ संरिहाणे । विपाट्छुतुद्र्यौ पयसा प्रजवेते ॥

आर्त्नी (३३) अर्तन्यौ वा । अरण्यौ वा * । आरिषण्यौ वा * । तयोरेषा भवति ॥ ३९ ॥ ५ ॥

ते आ॒चर॑न्ती॒ सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृता॒मु॒पस्थे॑ ।
अप॒ शत्रू॑न्विध्यतां सं॑विदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रन्ती॑ अ॒मित्रा॑न् ॥
ऋ० ६ । ७५ । ४ ॥

ते आचरन्त्यौ समनसाविव योषे † । मातेव पुत्रं बिभृतामुपस्थ उपस्थाने । अपविध्यतां शत्रून्त्संविदाने आर्त्न्या-विमे विघ्नत्यावमित्रान् ॥

* रण्यौ वा । रिषण्यौ वा । इति पाठा० ॥ † योषा=योषे ॥ सं० ॥

शुनासीरौ (३४) शुनो वायुः । शु एत्यन्तरिक्षे । सीर आदित्यः । सरणात् । तयोरेषा भवति ॥ ४० ॥ ६ ॥

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।
तेनेमामुप सिञ्चतम् ॥ ऋ० ४ । ५७ । ५ ॥

इति सा निगदव्याख्याता ॥

देवी जोष्ट्री (३५) देव्यौ जोषयित्र्यौ । द्यावापृथिव्याविति वा । अहोरात्रे इति * । सस्यं च समा च इति कात्थक्यः । तयोरेषः सम्प्रैषो भवति ॥ ४१ ॥ ७ ॥

देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्या ।
वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥
मै० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ॥

देवी जोष्ट्री देव्यौ जोषयित्र्यौ । वसुधिती वसुधान्यौ । ययोरन्याघानि द्वेषांस्यवयावयति । आवहत्यन्या वसूनि वननीयानि † यजमानाय । वसुवननाय च वसुधानाय च । वीतां पिबेताम् । कामयेतां वा । यजेति सम्प्रैषः ॥

देवी ऊर्जाहुती (३६) देव्या ऊर्जाह्वान्यौ । द्यावापृथिव्याविति वा । अहोरात्रे इति वा । सस्यं च समा च इति कात्थक्यः । तयोरेषः सम्प्रैषो भवति ॥ ४२ ॥ ८ ॥

---

* इति वा । इति पाठान्तरम् ॥ † वरणीयानि । इति पाठा० ॥ सं० ॥

देवी ऊर्जाहुती इषमूर्जमन्या वक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥

मै० सं० ४ । १३ । ८॥ तै० ब्रा० ३ । ६ । १३ ॥

देवी ऊर्जाहुती देव्यौ ऊर्जाह्वान्यौ । अन्नं * च रसं चावहत्यावहत्यन्या † । सहजग्धिं च सहपीतिं चान्या । नवेन पूर्वं दयमानाः स्याम । पुराणेन नवम् । तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च । वीतां पिबेताम् । कामयेतां वा । यजेति सम्प्रैषः । यजेति सम्प्रैषः ॥ ४३ ॥ ६ ॥

इति निरुक्तोत्तर षट्के तृतीयाऽध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्ते नवमोऽध्यायश्च समाप्तः ॥

---

* इषं च । इति पाठान्तरम् ॥

† चावहत्यन्या । इत्येष पाठोऽत्र पाठान्तरे ॥ सं० ॥

ओ३म्

# अथ चतुर्थाऽध्यायारम्भः ॥

( निरुक्ते दशमोऽध्यायः )

## तत्र प्रथमः पादः ॥

### अथातो मध्यस्थाना देवताः ।

तासां वायुः ( निघ० ५ । ४ । १ ) प्रथमागामी भवति । वायुर्वातेः । वेतेर्वा स्याद् गतिकर्मणः । एतेरिति स्थौलाष्ठीविः । अनर्थको वकारः । तस्यैषा भवति ॥ १ ॥

वायवा याहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् ॥ ऋ० १ । २ । १ ॥

वायवायाहि दर्शनीय । इमे सोमा अरङ्कृता अलङ्कृताः । तेषां पिब । शृणु नो ह्वानमिति । कमन्यं मध्यमात् एवमवक्ष्यत् । तस्यैषापरा भवति ॥ २ ॥

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥
ऋ० ६ । ३७ । ३ ॥

आसस्रवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वाः । रथस्य वोढारः । ऋज्यन्त ऋजुगामिनः । अन्नमभिवहेयुर्नवं च पुराणं च । श्रवः ( निघ० २ । ७ । ४ ) इत्यन्ननाम ।

श्रूयत इति सतः । वायोश्चास्य भक्तो यथा न * विद्यस्येदिति । इन्द्रप्रधानेत्येके । नैघण्टुकं वायुकर्म । उभयप्रधानेत्यपरम् ॥

वरुणः ( २ ) वृणोतीति सतः । तस्यैषा भवति ॥ ३ ॥

नीचीनबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥
ऋ० ५ । ८५ । ३ ॥

नीचीनद्वारं वरुणः कबन्धं † मेघम् । कवनमुदकं भवति । तदस्मिन्धीयते । उदकमपि कबन्धम् ( निघ० १ । १२ । ६ ) उच्यते । बन्धिरनिभृतत्वे । कमनिभृतं च । प्रसृजति । द्यावापृथिव्यौ चान्तरिक्षं च । महत्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् । तस्यैषापरा भवति ॥ ४ ॥

तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा
स मध्यमो नभन्तामन्यके समे ॥ ऋ० ८ । ४१ । २ ॥

तं स्वभिष्टौमि समानया गिरा । गीत्या स्तुत्या । पितॄणां च मननीयैः स्तोमैः । नाभाकस्यप्रशस्तिभिः । ऋषिर्नाभाको बभूव । यः स्यन्दमानानामासामपामुपोदये । सप्तस्वसारमेनमाह वाग्भिः ।

---

* "नु" शब्दः प्रायेण विकल्पार्थद्योतकः शीघ्रार्थद्योतको वा । परमत्र निषेधार्थको मन्तव्योऽन्यथा यास्कमुनेरर्थस्य सङ्गतिरेवाशक्या । एतस्मादाचार्येण पूर्वमेव पठितम् "नु" इत्येषोऽनेककर्मा ( निरु० १ । ४ ) इति ॥

† कवन्धं । इति पाठान्तरम् ॥ सं० ॥

स मध्यम इति निरुच्यते। अथैष एव भवति। नभन्तामन्यके समे। मा भूवन्नन्यके सर्वे। ये नो द्विषन्ति दुर्धियः पापधियः। पापसङ्कल्पाः॥

रुद्रः (३) रौतीति सतः। रोरूयमाणो द्रवतीति वा। रोदयतेर्वा। यदरुदत् [समरुजत्] तद्रुद्रस्य रुद्रत्वमिति **काठकम्** (काठक सं० २५।१)। यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति **हारिद्रविकम्**। तस्यैषा भवति॥५॥

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधान्ने।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः॥
ऋ० ७।४६।१॥

इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत। शृणोतु नः। तिग्मं तेजतेरुत्साहकर्मणः। आयुधमायोधनात्। तस्यैषापरा भवति॥६॥

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः॥
ऋ० ७।४६।३॥

या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि। दिद्युद् द्यतेर्वा। द्युतेर्वा। द्योततेर्वा। क्ष्मया चरति। क्ष्मा पृथिवी। तस्यां चरति। तया चरति। विक्ष्मापयन्ती चरतीति वा। परिवृणक्तु नः सा। सहस्रं ते स्वाप्तवचन! भैषज्यानि। मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः। तोकं (निघ० २।२।२) तुद्यतेः। तनयं (निघ० २।२।३) तनोतेः। अग्निरपि रुद्र उच्यते। तस्यैषा भवति॥७॥

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।

स्तोमं रुद्राय दृशीकम् ॥ ऋ० १ । २७ । १० ॥

जरा स्तुतिः । जरतेः स्तुतिकर्मणः । तां बोध *। तया बोधयितरिति वा । तद्विविड्ढि तत्कुरु । मनुष्यस्य मनुष्यस्य यजनाय †। स्तोमं रुद्राय दर्शनीयम् ॥

इन्द्रः ( ४ ) इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयते इति वा । इरां धारयते इति वा । इन्दवे द्रवतीति वा । इन्दौ रमते इति वा । इन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धंस्तदिन्द्र‡स्येन्द्रत्वम् इति विज्ञायते । इदं करणादित्याग्रायणः । इदं दर्शनादित्यौपमन्यवः । इन्दतेर्वैश्वर्य्यकर्मणः । इञ्छत्रूणां दारयिता वा । द्रावयिता वा । आदरयिता च यज्वनाम् । तस्यैषा भवति ॥ ८ ॥

अदर्दुरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।

महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥

ऋ० ५ । ३२ । १ ॥

अदृणाः उत्सम् । उत्सः उत्सरणाद्वा । उत्सदनाद्वा । उत्स्यन्दनाद्वा । उनत्तेर्वा । व्यसृजोऽस्य खानि । त्वमर्णवानर्णस्वत एतान्माध्यमिकान्त्संस्त्यायान्वाबध्यमानानरम्णाः । रम्णातिः संयमनकर्मा । विसर्जनकर्मा वा । महान्तमिन्द्र पर्वतं मेघं यद् व्यवृणोः । व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणम् । तस्यैषापरा भवति ॥ ९ ॥

---

* तां बोधय । इति पाठा० ॥ † मनुष्यस्य मनुष्यस्य वा यज्ञियाय । इति पाठा० ॥ ‡ समैन्धत तदिन्द्र० । इति पाठान्तरम् ॥ सं० ॥

यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥
ऋ० २ । १२ । १ ॥

यो जायमान * एव प्रथमो मनस्वी देवो देवान्क्रतुना कर्मणा पर्यभवत् । पर्यगृह्णात् । पर्यरक्षत् । अत्यक्रामदिति वा । यस्य बलाद् द्यावापृथिव्यावप्यबिभीताम् । नृम्णस्य मह्ना बलस्य महत्त्वेन । स जनास इन्द्रः । इति । ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥

पर्जन्यः ( ५ ) तृपेराद्यन्तविपरीतस्य । तर्पयिता जन्यः । परः जेता वा । जनयिता वा । प्रार्जयिता वा रसानाम् । तस्यैषा भवति ॥ १० ॥

वि वृक्षान्हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ॥
ऋ० ५ । ८३ । २ ॥

विहन्ति वृक्षान्विहन्ति च रक्षाँसि । सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् । महान्ह्यस्य वधः । अप्यनपराधो भीतः पलायते वर्षकर्मवतः । यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः पापकृतः ॥

बृहस्पतिः ( ६ ) बृहतः पाता वा पालयिता वा । तस्यैषा भवति ॥ ११ ॥

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य ॥
ऋ० १० । ६८ । ८ ॥

* जातः । इति पाठा० ॥ सं० ॥

अशनवता मेघेनापिनद्धं मधु पर्यपश्यत् । मत्स्यमिव दीने उदके निवसन्तम् । निर्जहार तच्चमसमिव वृक्षात् । चमसः कस्मात् ? चमन्त्यस्मिन्निति । बृहस्पतिर्विरवेण शब्देन विकृत्य ॥

ब्रह्मणस्पतिः (७) ब्रह्मणः पाता वा पालयिता वा । तस्यैषा भवति ॥ १२ ॥

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥
ऋ० २ । २४ । ४ ॥

अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत् । तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशः । बह्वेनं सह सिञ्चन्त्युत्सम् । उद्रिणमुदकवन्तम् ॥ १३ ॥

इति चतुर्थोऽध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

क्षेत्रस्य पतिः (८) । क्षेत्रं क्षियतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति ॥ १४ ॥ १ ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ ऋ० ४ । ५७ । १ ॥

क्षेत्रस्य पतिना वयं सुहितेनेव जयामः * । गामश्वं पुष्टं पोषयितृ त्वाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा । मृळतिर्दानकर्मा † । तस्यैषापरा भवति ॥ १५ ॥ २ ॥

---

* जयेम । इति पाठान्तरम् ॥

† पूजाकर्मा वा । इत्यधिकं केषुचित्पुस्तकेषु ॥ सं० ॥

क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व ।
म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृळयन्तु ॥
ऋ० ४ । ५७ । २ ॥

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति । मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु । मृळयतिरुपदयाकर्मा । पूजाकर्मा वा । तद्यत्समान्यामृचि समानाभिव्याहारं भवति । तज्जामि भवतीत्येकम् । मधुमन्तं मधुश्चुतमिति यथा । यदेव समाने पादे समानाभिव्याहारं भवति । तज्जामि भवतीत्यपरम् ।

हिर॑ण्यरूपः॒ स हिर॑ण्यसंदृक् । ऋ० २ । ३५ । १० ॥

इति यथा ।

यथाकथा च विशेषोऽजामि भवतीत्यपरम् ।

म॒ण्डूका॑ इ॒वोद॒कान्म॒ण्डूका॑ उद॒कादि॑व ॥ ऋ० १० । १६६ । ५ ॥

इति यथा ॥

वास्तोष्पतिः ( ६ ) । वास्तुर्वसतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति ॥ १६ ॥ ३ ॥

अ॒मी॒व॒हा वा॑स्तोष्पते॒ विश्वा॑ रू॒पाण्या॑वि॒शन् ।
सखा॑ सु॒शेव॑ एधि नः ॥ ऋ० ७ । ६५ । १ ॥

अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन् । सखा नः सुसुखो भव । शेवः ( निघ० ३ । ६ । १७ ) इति सुखनाम । शिष्यतेः । वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः । शिवम् ( निघ० ३ । ६ । १८ ) इत्यप्यस्य भवति । यद्यद्रूपं कामयते तत्तद् देवता भवति ।

रूपंरूपं मघवा बोभवीति ॥ ऋ० ३ । ५३ । ८ ॥

इत्यपि निगमो भवति ॥

वाचस्पतिः ( १० ) वाचः पाता वा पालयिता वा । तस्यैषा भवति ॥ १७ ॥ ४ ॥

पुनरेहि वाचस्पते देवेन मनसा सह ।

* वसोष्पते नि रामय मय्येव तन्वं मम ॥

अथर्व० १ । १ । २ ॥

इति सा निगदव्याख्याता ॥

अपांनपात् ( ११ ) तनूनप्त्रा व्याख्यातः ( निरु० ८ । ५ ) । तस्यैषा भवति ॥ १८ ॥ ५ ॥

यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईळते अध्वरेषु ।

अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥

ऋ० १० । ३० । ४ ॥

योऽनिध्मो दीदयद् दीप्यतेऽभ्यन्तरमप्सु । यं मेधाविनः स्तुवन्ति यज्ञेषु । सोपां † नपान्मधुमतीरपो देह्यभिषवाय । याभिरिन्द्रो वर्धते वीर्याय वीरकर्मणे ॥

यमः ( १२ ) यच्छतीति सतः । तस्यैषा भवति ॥ १९ ॥ ६ ॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।

वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥

ऋ० १० । १४ । १ ॥

---

* वसोष्पते निरमय मय्येवास्तु मयि श्रुतम् । इति अथर्वपाठः ॥

† अपान्नपात । इति पाठा० ॥ सं० ॥

परेयिवांसं पर्यागतवन्तम् । प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा । बहुभ्यः पन्थानमनुपस्पाशयमानम् । वैवस्वतं सङ्गमनं यमं राजानं हविषा दुवस्य । इति । दुवस्यतिः ( निघ० ३ । ५ । ५ ) राध्नोतिकर्मा * । अग्निरपि यम उच्यते । तमेता ऋचोऽनुप्रवदन्ति ॥ २० ॥ ७ ॥

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।

यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥

ऋ० १ । ६६ । ४ ॥

तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ॥

ऋ० १ । ६६ । ५ ॥

इति द्विपदाः । सेनेव सृष्टा । भयं वा । बलं वा । दधाति । अस्तुरिव दिद्युत्त्वेषप्रतीका । भयप्रतीका । बलप्रतीका । महाप्रतीका । दीप्तप्रतीका वा । यमो ह जातः । इन्द्रेण सह सङ्गतः ।

यमाविहेह मातरा ॥ ऋ० ६ । ५९ । २ ॥

इत्यपि निगमो भवति ॥

यम इव जातः । यमो जनिष्यमाणः । जारः कनीनां जरयिता कन्यानाम् । पतिर्जनीनां पालयिता जायानाम् । तत्प्रधाना हि यज्ञसंयोगेन भवन्ति ।

तृतीयो अग्निष्टे पतिः ॥ ऋ० १० । ८५ । ४० ॥

इत्यपि निगमो भवति ॥

---

* टुवस् परिताप परिचरणयोः । दुवस्यति परिचरणकर्मा ( निघ० ३ । ५ । ५ ) । परमत्रास्य सिद्ध्यर्थोऽपि संसूचितः आचार्यवर्येण ॥ सं० ॥

तं वश्चराथा । चरन्त्या पश्वाहुत्या । वसत्या च निवसन्त्यौ-षधाहुत्या । अस्तं यथा गाव आप्नुवन्ति तथाप्नुयाम । इद्धं समृद्धं * भोगैः ॥

मित्रः ( १३ ) प्रमीतेस्त्रायते: । सम्मिन्वानो द्रवतीति वा । मेदयतेर्वा । तस्यैषा भवति ॥ २१ ॥ ८ ॥

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥
ऋ० ३ । ५९ । १ ॥

मित्रो जनानायातयति ब्रुवाणः † । शब्दं कुर्वन् । मित्र एव धारयति पृथिवीं च दिवं च । मित्रः कृष्टीरनिमिषन्नभिविपश्य-तीति । कृष्टयः ( निघ० २ । ३ । ७ ) इति मनुष्यनाम । कर्म-वन्तो भवन्ति । विकृष्टदेहा वा । मित्राय हव्यं घृतवज्जुहोत इति व्याख्यातम् । जुहोतिः दानकर्मा ॥

कः ( १४ ) कमनो वा । क्रमणो वा । सुखो वा । तस्यैषा भवति ॥ २२ ॥ ९ ॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
ऋ० १० । १२१ । १ ॥

हिरण्यगर्भो हिरण्यमयो गर्भः । हिरण्यमयो गर्भोऽस्येति वा । गर्भो गृभेर्गृणात्यर्थे । गिरत्यनर्थानिति वा । यदा हि स्त्री गुणा-न्गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति । समभवदग्रे

* समिद्धम् । इति पाठा० ॥ † प्रब्रुवाणः । इति पाठा० ॥ सं० ॥

भूतस्य जातः पतिरेको बभूव । स धारयति पृथिवीं च दिवं च । कस्मै देवाय हविषा विधेम इति व्याख्यातम् । विधतिः दानकर्मा ॥

सरस्वान् ( १५ ) व्याख्यातः ( निरु० ६ । २६ ) । तस्यैषा भवति ॥ २३ ॥ १० ॥

ये ते॑ सरस्व ऊ॒र्मयो॒ मधु॑मन्तो घृ॒तश्चुत॑: । तेभि॑र्नोऽवि॒ता भ॑व ॥

ऋ० ७ । ९६ । ५ ॥

इति सा निगदव्याख्याता ॥ २४ ॥ ११ ॥

इति चतुर्थोऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

विश्वकर्मा ( १६ ) सर्वस्य कर्त्ता । तस्यैषा भवति ॥ २५ ॥ १ ॥

वि॒श्वक॑र्मा॒ विम॑ना॒ आद्विहा॑या धा॒ता वि॑धा॒ता प॑र॒मोत सं॒दृक् । तेषा॑मि॒ष्टानि॒ समि॒षा म॑दन्ति॒ यत्रा॑ सप्तऋ॒षीन्प॒र एक॑मा॒हुः ॥

ऋ० १० । ८२ । २ ॥

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्द्रष्टा भूतानाम् । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अद्भिः सह सम्मोदन्ते । यत्रैतानि सप्तऋषीणानि * ज्योतींषि । तेभ्यः परः आदित्यः । तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् । अथाध्यात्मम् । विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्दर्शयितेन्द्रियाणाम् । एषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा

---

* सप्तर्षिखानि । इति पाठा० ॥ सं० ॥

मतानि वा नतानि वा । अन्नेन सह सम्मोदन्ते । यत्रेमानि सप्त-ऋषीणानीन्द्रियाणि । एभ्यः परः आत्मा । तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे । तत्रेतिहासमाचक्षते–विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार । स आत्मानमप्यन्ततो जुहवाञ्चकार । तदभिवादिन्येषर्ग्भवति ।

य इमा विश्वा भुवनानि जुह्वत् ॥ ऋ० १० । ८१ । १ ॥

इति । तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥ २ ॥

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥
ऋ० १० । ८१ । ६ ॥

विश्वकर्म्मन् ! हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च । मुह्यन्त्वन्ये अभितो जनाः सपत्नाः । इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥

तार्क्ष्यः ( १७ ) त्वष्ट्रा [ त्वष्टा ] व्याख्यातः ( निरु० ८ । १३-१४ ) । तीर्णेऽन्तरिक्षे क्षियति । तूर्णमर्थं रक्षति । अश्नोतेर्वा । तस्यैषा भवति ॥ २७ ॥ ३ ॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥
ऋ० १० । १७८ । १ ॥

तं भृशमन्नवन्तम् । जूतिर्गतिः । प्रीतिर्वा । देवजूतं देवगतम् । देवप्रीतं वा । सहस्वन्तम् । तारयितारं रथानाम् । अरिष्टनेमिम् । पृतनाजितम् । आशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति । कमन्यं मध्य-मादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ २८ ॥ ४ ॥

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥

ऋ० १० । १७८ । ३ ॥

सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसानिनी शतसानिन्यस्य सा गतिः । न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥

मन्युः ( १८ ) मन्यतेर्दीप्तिकर्मणः * । क्रोधकर्मणो वधकर्मणो वा । मन्युन्त्यस्मादिषवः † । तस्यैषा भवति ॥ २९ ॥ ५ ॥

त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥

ऋ० १० । ८४ । १ ॥

त्वया मन्यो सरथमारुह्य रुजन्तो ‡ हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो + अग्निरूपा अग्निकर्माणः । सन्नद्धाः कवचिन इति वा ॥

दधिक्राः ( १९ ) व्याख्याताः ( निरु० २ । २७ ) । तस्यैषा भवति ॥ ३० ॥ ६ ॥

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥

ऋ० ४ । ३८ । १० ॥

* मन्युर्मन्यतेः कान्तिकर्मणः इति निरुक्तम् । इति सायणः अथर्व भाष्ये । ४ । ३१ । १ ॥ † मन्यन्त्यस्मात् । मन्युं त्वस्मात् । इति पाठान्तरे ॥ ‡ सायणस्त्वेवं पठति स्वभाष्ये "यास्कस्त्वाह—सरथं समानं रथं आरुह्य रुजन्त इति" ॥ + नराः । इति पाठा० ॥ सं० ॥

आतनोति दधिक्राः शवसा बलेनापः सूर्य्य इव ज्योतिषा पञ्च मनुष्यजातानि। सहस्रसाः शतसा वाजी वेजनवानर्वैरणवान्*तत्सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति। मधु धमतेर्विपरीतस्य ॥

सविता ( २० ) सर्वस्य प्रसविता। तस्यैषा भवति ॥ ३१ ॥ ७ ॥

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥

ऋ० १० । १४९ । १ ॥

सविता यन्त्रैः पृथिवीमरमयत् । अनारम्भणे † ऽन्तरिक्षे सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघम् । बद्धम् अतूर्ते बद्धम् अतूर्णे इति वा । अत्वरमाणे इति वा । सविता समुदितारमिति । कमन्यं मध्यमादेवमवक्ष्यत् ? आदित्योऽपि सवितोच्यते । तथा च हैरण्यस्तूपेस्तुतः । अर्चन्हिरण्यस्तूप-ऋषिरिदं सूक्तं प्रोवाच । तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥ ८ ॥

हिरण्यस्तूपः सवितर्यथा त्वाऽऽङ्गिरसो जुह्वे वाजे अस्मिन् ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥

ऋ० १० । १४९ । ५ ॥

हिरण्यस्तूपो हिरण्यमयः ‡ स्तूपः। हिरण्यमयः स्तूपोऽस्येति वा +। स्तूपः स्त्यायतेः । संघातः । सवितः ! यथा त्वाङ्गिरसो

---

* वाजी वेजनवान् । अर्वा ईरणवान् । इति स्पष्टम् ॥

† अनालम्भने अथवा अनालम्बने । इति पाठान्तरे ॥

‡ हिरण्यमय० इति वा । इति पाठा० ॥ अत्र कर्मधारयः समासः ॥

+ अत्र बहुव्रीहिः समासः ॥ सं० ॥

जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम् ॥

त्वष्टा ( २१ ) व्याख्यातः ( निरु० ८ । १३ ) । तस्यैषा भवति ॥ ३३ ॥ ९ ॥

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥
ऋ० ३ । ५५ । १९ ॥

देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन । बहुधा चेमा जनयति । इमानि च सर्वाणि भूतान्युदकान्यस्य । महच्चास्मै देवानामसुरत्वमेकम् । प्रज्ञावत्त्वं वा । अनवत्त्वं * वा । अपि वा । असुः ( निघ० ३ । ९ । ६ ) इति प्रज्ञानाम । अस्यत्यनर्थानस्ताश्चास्यामर्थाः † । असुरत्वमादलुप्तम् ‡ ॥

वातः ( २२ ) वातीति सतः । तस्यैषा भवति ॥ ३४ ॥ १० ॥

वात आ वातु भेषजं शम्भु मयोभु नो हृदे ।
प्र ण आयूंषि तारिषत् ॥ ऋ० १० । १८६ । १ ॥

वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय । प्रवर्धयतु च न आयुः ।

अग्निः ( २३ ) व्याख्यातः ( निरु० ७ । १४ ) तस्यैषा भवति ॥ ३५ ॥ ११ ॥

---

* अन्नवत्त्वम् । इति केचित् ॥
† अनर्थाः । इति पाठान्तरम् ॥
‡ 'वसुरत्वम् आदि लुप्तं वा । वातः०' । इति पाठा० ॥ सं० ॥

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ॥
ऋ० १ । १९ । १ ॥

तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे । सोऽग्ने मरुद्भिः सहागच्छेति । कमन्यं मध्यमादेवमवक्ष्यत् ? तस्यैषापरा भवति ॥ ३६ ॥ १२ ॥

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥
ऋ० १ । १९ । ९ ॥

अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयम् । सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७ ॥ १३ ॥

इति चतुर्थोऽध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

वेनः ( २४ ) वेनतेः कान्तिकर्मणः । तस्यैषा भवति ॥ ३८ ॥ १ ॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥

अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा । ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति । जरायु जरया गर्भस्य । जरया यूयत इति वा । इममपां च सङ्गमने * सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति । लिहन्ति † । स्तुवन्ति ।

---

* सङ्गमे । इति पाठा० ॥ † रिहन्ति लिहन्ति । इति पाठा० ॥ सं० ॥

वर्धयन्ति । पूजयन्तीति वा । शिशुः शंसनीयो भवति । शिशीतेर्वा स्याद् दानकर्मणः । चिरलब्धो गर्भो भवति ॥

असुनीतिः (२५) असून्नयति । तस्यैषा भवति ॥ ३९ ॥ २ ॥

असुनीते मनो अस्मासु धारय जीवातवे सु प्रतिरा न आयुः ।
रारन्धि नः सूर्यस्य सन्दृशि घृतेन त्वं तन्वं वर्धयस्व ॥

ऋ० १० । ५९ । ५ ॥

असुनीते ! मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयुः । रन्धय च नः सूर्यस्य सन्दर्शनाय । रध्यतिर्वशगमनेऽपि दृश्यते ।

मा रधाम द्विषते सोम राजन् ॥ ऋ० १० । १२८ । ५ ॥

इत्यपि निगमो भवति । घृतेन त्वमात्मानं तन्वं वर्धयस्व ॥

ऋतः (२६) व्याख्यातः (निरु० २ । २५) । तस्यैषा भवति ॥४०॥३॥

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥

ऋ० ४ । २३ । ८ ॥

ऋतस्य हि शुरुधः * सन्ति पूर्वीः । ऋतस्य प्रज्ञा वर्जनीयानि हन्ति । ऋतस्य † श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो

* शुरुधः । इति पदनाम (निघ० ४।३) याः शु सद्यो रुन्धन्ति ताः स्व सेनाः । इति ऋग्वेदभाष्ये श्रीमच्छ्रवामि दयानन्दाभिप्रायम् ॥

† श्लोको वाक् । श्लोक इति वाङ्नाम (निघ० १ । ११) ॥ सं० ॥

बद्धश्रोत्रः । कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य मनुष्यस्य । ज्योतिषो वा । उदकस्य वा ॥

इन्दुः (२७) इन्धेरुनत्तेर्वा । तस्यैषा भवति ॥ ४१ ॥ ४ ॥

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥

ऋ० १ । १२९ । ६ ॥

प्रब्रवीमि तद्भव्यायेन्दवे । हवनार्ह इव य इषवानन्नवानकामवान्वा । मननानि च नो रेजयति । रक्षोहा च बलेन रेजयति । स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसः । ततश्चावतरं क्षुद्रमिवावस्रवेत् । अभ्यासे भूयांसमर्थं मन्यन्ते । यथाहो दर्शनीयाहो दर्शनीयेति * । तत्परुच्छेपस्य शीलम् । परुच्छेप ऋषिः । पर्ववच्छेपः । परुषि परुषि शेपोऽस्येति वा ॥

इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि । सूक्तभाञ्जि हविर्भाञ्जि । तेषामेतान्यहविर्भाञ्जि=वेनोऽसुनीतिर्ऋत इन्दुः ॥

प्रजापतिः ( २८ ) प्रजानां पाता वा पालयिता वा । तस्यैषा भवति ॥ ३९ ॥ २ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

ऋ० १० । १२१ । १० ॥

---

* यथा—अहो ! दर्शनीय, अहो ! दर्शनीय, इत्यभ्यासवचनमर्थवैशिष्ट्यार्थं तथैव " मन्म रेजति " " अवस्रवेत् " अत्राप्यभ्यासवचनमर्थवैशिष्ट्यार्थमर्थस्याकर्षणार्थञ्चास्तीत्याशयः ॥ सं० ॥

प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परि-बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । वयं स्याम पतयो रयीणाम् । इत्याशिः ॥

अहिः ( २९ ) व्याख्यातः ( निरु० २ । १७ ) तस्यैषा भवति ॥ ४३ ॥ ६ ॥

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥

ऋ० ७ । ३४ । १६ ॥

अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजस्सूदकेषु षीदन् * । बुध्नमन्तरिक्षम् । बद्धा अस्मिन्धृता आप इति । वा । इदमपीतरद्बुध्नमेतस्मादेव । बद्धा अस्मिन्धृता प्राणा इति ।

[ अहिर्बुध्न्यः ] योऽहिः स बुध्न्यः ( ३० ) । बुध्नमन्तरिक्षं तन्निवासात् । तस्यैषा भवति ॥ ४४ ॥ ७ ॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥

ऋ० ७ । ३४ । १७ ॥

मा च नोऽहिर्बुध्न्यो रेषणाय धात् । मा अस्य यज्ञोत्रा च स्रिधद् यज्ञकामस्य ॥

सुपर्णः ( ३१ ) व्याख्यातः ( निरु० ३ । १२ ) । तस्यैषा भवति ॥ ४५ ॥ ८ ॥

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसा पश्यमन्तितस्तं माता रेळिह स उ रेळिह मातरम् ॥

ऋ० १० । ११४ । ४ ॥

* सीदन् । इति पाठा० ॥ सं० ॥

एकः सुपर्णः । स समुद्रमाविशति । स इमानि सर्वाणि भूतान्यभिविपश्यति । तं पाकेन मनसाऽपश्यमन्तितः। इत्यृषेर्द्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता । तं माता रेढि * । वागेषा माध्यमिका । स उ मातरं रेढि ॥

पुरूरवाः ( ३२ ) बहुधा रोरूयते । तस्यैषा भवति ॥ ४६ ॥ ६ ॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायाऽवर्धयन्दस्युहत्याय देवाः ॥
ऋ० १० । ६५ । ७ ॥

समासतास्मिञ्जायमाने ग्नाः । गमनादापः । देवपत्न्यः वा । अपि चैनमवर्द्धयन्नद्यः । स्वगूर्ताः । स्वयंगामिन्यः । महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन् । दस्युहत्याय च देवाः देवाः ॥ ४७ ॥ १० ॥

इति निरुक्तोत्तरषट्के चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्ते दशमोऽध्यायश्च समाप्तः ॥

---

* रेह्लि, रेह्ळि, रेळ्हि । इति पाठान्तराणि ॥ सं० ॥

